## ॥ श्री महालक्ष्मी सहस्रनाम स्तोत्रम् ॥

श्रीः पद्मा प्रकृतिः सत्त्वा शान्ता चिच्छक्तिरव्यया ।
केवला निष्कला शुद्धा व्यापिनी व्योमविग्रहा ॥ १ ॥

व्योमपद्मकृताधारा परा व्योमामृतोद्भवा ।
निर्व्योमा व्योममध्यस्था पंचव्योमपदाश्रिता ॥ २ ॥

अच्युता व्योमनिलया परमानन्दरूपिणी ।
नित्यशुद्धा नित्यतृप्ता निर्विकारा निरीक्षणा ॥ ३ ॥

ज्ञानशक्तिः कर्तृशक्तिर्भोक्तृशक्तिः शिखावहा ।
स्नेहाभासा निरानन्दा विभूतिर्विमलाचला ॥ ४ ॥

अनन्ता वैष्णवी व्यक्ता विश्वानन्दा विकासिनी ।
शक्तिर्विभिन्नसर्वार्तिः समुद्रपरितोषिणी ॥ ५ ॥

मूर्तिः सनातनी हार्दी निस्तरंगा निरामया ।
ज्ञानज्ञेया ज्ञानगम्या ज्ञानज्ञेयविकासिनी ॥ ६ ॥

स्वच्छन्दशक्तिर्गहना निष्कम्पार्चिः सुनिर्मला ।
स्वरूपा सर्वगा पारा बृंहिणी सुगुणोर्जिता ॥ ७ ॥

अकलंका निराधारा निःसंकल्पा निराश्रया ।
असंकीर्णा सुशान्ता च शाश्वती भासुरी स्थिरा ॥ ८ ॥

अनौपम्या निर्विकल्पा नियन्त्री यन्त्रवाहिनी ।
अभेद्या भेदिनी भिन्ना भारती वैखरी खगा ॥ ९ ॥

अग्राह्या ग्राहिका गूढा गम्भीरा विश्वगोपिनी ।
अनिर्देश्या प्रतिहता निर्बीजा पावनी परा ॥ १० ॥

अप्रतर्क्या परिमिता भवभ्रान्तिविनाशिनी ।
एका द्विरूपा त्रिविधा असंख्याता सुरेश्वरी ॥ ११ ॥

सुप्रतिष्ठा महाधात्री स्थितिर्वृद्धिर्ध्रुवा गतिः ।
ईश्वरी महिमा ऋद्धिः प्रमोदा उज्ज्वलोद्यमा ॥ १२ ॥

अक्षया वर्द्धमाना च सुप्रकाशा विहंगमा ।
नीरजा जननी नित्या जया रोचिष्मती शुभा ॥ १३ ॥

तपोनुदा च ज्वाला च सुदीप्तिश्चांशुमालिनी
अप्रमेया त्रिधा सूक्ष्मा परा निर्वाणदायिनी ॥ १४ ॥

अवदाता सुशुद्धा च अमोघाख्या परम्परा ।
संधानकी शुद्धविद्या सर्वभूतमहेश्वरी ॥ १५ ॥

लक्ष्मीस्तुष्टिर्महाधीरा शान्तिरापूरणानवा ।
अनुग्रहा शक्तिराद्या जगज्ज्येष्ठा जगद्विधिः ॥ १६ ॥

सत्या प्रह्वा क्रिया योग्या अपर्णा ह्लादिनी शिवा ।
सम्पूर्णह्लादिनी शुद्धा ज्योतिष्मत्यमृतावहा ॥ १७ ॥

रजोवत्यर्कप्रतिभाऽऽकर्षिणी कर्षिणी रसा ।
परा वसुमती देवी कान्तिः शान्तिर्मतिः कला ॥ १८ ॥

कला कलंकरहिता विशालोद्दीपनी रतिः ।
सम्बोधिनी हारिणी च प्रभावा भवभूतिदा ॥ १९ ॥

अमृतस्यंदिनी जीवा जननी खंडिका स्थिरा ।
धूमा कलावती पूर्णा भासुरा सुमतीरसा ॥ २० ॥

शुद्धा ध्वनिः सृतिः सूष्टिर्विकृतिः कृष्टिरेव च ।
प्रापणी प्राणदा प्रह्वा विश्वा पांडुरवासिनी ॥ २१ ॥

अवनिर्वज्रनलिका चित्रा ब्रह्मांडवासिनी ।
अनंतरूपानंतात्मानंतस्थानंतसंभवा ॥ २२ ॥

महाशक्तिः प्राणशक्तिः प्राणदात्री ऋतंभरा ।
महासमूहा निखिला इच्छाधारा सुखावहा ॥ २३ ॥

प्रत्यक्षलक्ष्मीर्निष्कंपा प्ररोहाबुद्धिगोचरा ।
नानादेहा महावर्ता बहुदेहविकासिनी ॥ २४ ॥

सहस्राणी प्रधाना च न्यायवस्तुप्रकाशिका ।
सर्वाभिलाषपूर्णेच्छा सर्वा सर्वार्थभाषिणी ॥ २५ ॥

नानास्वरूपचिद्धात्री शब्दपूर्वा पुरातनी ।
व्यक्ताव्यक्ता जीवकेशा सर्वेच्छापरिपूरिता ॥ २६ ॥

संकल्पसिद्धा सांख्येया तत्त्वगर्भा धरावहा ।
भूतरूपा चित्स्वरूपा त्रिगुणा गुणगर्विता ॥ २७ ॥

प्रजापतीश्वरी रौद्री सर्वाधारा सुखावहा ।
कल्याणवाहिका कल्या कलिकल्मषनाशिनी ॥ २८ ॥

नीरूपोद्भिन्नसंताना सुयंत्रा त्रिगुणालया ।
महामाया योगमाया महायोगेश्वरी प्रिया ॥ २९ ॥

महास्त्री विमला कीर्तिर्जया लक्ष्मीर्निरंजना ।
प्रकृतिर्भगवन्माया शक्तिर्निद्रा यशस्करी ॥ ३० ॥

चिंता बुद्धिर्यशः प्रज्ञा शांतिः सुप्रीतिवर्द्धिनी ।
प्रद्युम्नमाता साध्वी च सुखसौभाग्यसिद्धिदा ॥ ३१ ॥

काष्ठा निष्ठा प्रतिष्ठा च ज्येष्ठा श्रेष्ठा जयावहा ।
सर्वातिशायिनी प्रीतिर्विश्वशक्तिर्महाबला ॥ ३२ ॥

वरिष्ठा विजया वीरा जयंती विजयप्रदा ।
हृद्गृहा गोपिनी गुह्या गणगंधर्वसेविता ॥ ३३ ॥

योगीश्वरी योगमाया योगिनी योगसिद्धिदा ।
महायोगेश्वरवृता योगा योगेश्वरप्रिया ॥ ३४ ॥

ब्रह्मेंद्ररुद्रनमिता सुरासुरवरप्रदा
त्रिवर्त्मगा त्रिलोकस्था त्रिविक्रमपदोद्भवा ॥ ३५ ॥

सुतारा तारिणी तारा दुर्गा संतारिणी परा ।
सुतारिणी तारयन्ती भूरितारेश्वरप्रभा ॥ ३६ ॥

गुह्यविद्या यज्ञविद्या महाविद्या सुशोभिता ।
अध्यात्मविद्या विघ्नेशी पद्मस्था परमेष्ठिनी ॥ ३७ ॥

आन्वीक्षिकी त्रयी वार्ता दंडनीतिर्नयात्मिका ।
गौरी वागीश्वरी गोप्त्री गायत्री कमलोद्भवा ॥ ३८ ॥

विश्वंभरा विश्वरूपा विश्वमाता वसुप्रदा ।
सिद्धिः स्वाहा स्वधा स्वस्तिः सुधा सर्वार्थसाधिनी ॥ ३९ ॥

इच्छा सृष्टिर्द्युतिर्भूतिः कीर्तिः श्रद्धा दयामतिः ।
श्रुतिर्मेधा धृतिर्ह्रीः श्रीर्विद्या विबुधवंदिता ॥ ४० ॥

अनसूया घृणा नीतिर्निर्वृतिः कामधुक्करा ।
प्रतिज्ञा संततिर्भूतिर्द्यौः प्रज्ञा विश्वमानिनी ॥ ४१ ॥

स्मृतिर्वाग्विश्वजननी पश्यंती मध्यमा समा ।
संध्या मेधा प्रभा भीमा सर्वाकारा सरस्वती ॥ ४२ ॥

कांक्षा माया महामाया मोहिनी माधवप्रिया ।
सौम्याभोगा महाभोगा भोगिनी भोगदायिनी ॥ ४३ ॥

सुधौतकनकप्रख्या सुवर्णकमलासना ।
हिरण्यगर्भा सुश्रोणी हारिणी रमणी रमा ॥ ४४ ॥

चंद्रा हिरण्मयी ज्योत्स्ना रम्या शोभा शुभावहा ।
त्रैलोक्यमंडना नारी नरेश्वरवरार्चिता ॥ ४५ ॥

त्रैलोख्यसुंदरी रामा महाविभववाहिनी ।
पद्मस्था पद्मनिलया पद्ममालाविभूषिता ॥ ४६ ॥

पद्मयुग्मधरा कांता दिव्याभरणभूषिता ।
विचित्ररत्नमुकुटा विचित्रांबरभूषणा ॥ ४७ ॥

विचित्रमाल्यगंधाढ्या विचित्रायुधवाहना ।
महानारायणी देवी वैष्णवी वीरवंदिता ॥ ४८ ॥

कालसंकर्षिणी घोरा तत्त्वसंकर्षिणीकला ।
जगत्संपूरणी विश्वा महाविभवभूषणा ॥ ४९ ॥

वारुणी वरदा व्याख्या घंटाकर्णविराजिता ।
नृसिंही भैरवी ब्राह्मी भास्करी व्योमचारिणी ॥ ५० ॥

ऐंद्री कामधेनुः सृष्टिः कामयोनिर्महाप्रभा ।
दृष्टा काम्या विश्वशक्तिर्बीजगत्यात्मदर्शना ॥ ५१ ॥

गरुडारूढहृदया चांद्री श्रीर्मधुरानना ।
महोग्नरूपा वाराही नारसिंही हतासुरा ॥ ५२ ॥

युगांतहुतभुग्ज्वाला कराला पिंगलाकला ।
त्रैलोक्यभूषणा भीमा श्यामा त्रैलोख्यमोहिनी ॥ ५३ ॥

महोत्कटा महारक्ता महाचंडा महासना ।
शंखिनी लेखिनी स्वस्था लिखिता खेचरेश्वरी ॥ ५४ ॥

भद्रकाली चैकवीरा कौमारी भवमालिनी ।
कल्याणी कामधुग्ज्वालामुखी चोत्पलमालिका ॥ ५५ ॥

बालिका धनदा सूर्या हृदयोत्पलमालिका ।
अजिता वर्षिणी रीतिर्भरुंडा गरुडासना ॥ ५६ ॥

वैश्वानरी महामाया महाकाली विभीषणा ।
महामंदारविभवा शिवानंदा रतिप्रिया ॥ ५७ ॥

उद्रीतिः पद्ममाला च धर्मवेगा विभावनी ।
सत्क्रिया देवसेना च हिरण्यरजताश्रया ॥ ५८ ॥

सहसावर्तमाना च हस्तिनादप्रबोधिनी ।
हिरण्यपद्मवर्णा च हरिभद्रा सुदुर्ध्दरा ॥ ५९ ॥

सूर्या हिरण्यप्रकटसदृशी हेममालिनी ।
पद्मानना नित्यपुष्टा देवमाता मृतोद्भवा ॥ ६० ॥

महाधना च या शृंगी कर्दमी कंबुकंधरा ।
आदित्यवर्णा चंद्राभा गंधद्वारा दुरासदा ॥ ६१ ॥

वराचिता वरारोहा वरेण्या विष्णुवल्लभा ।
कल्याणी वरदा वामा वामेशी विंध्यवासिनी ॥ ६२ ॥

योगनिद्रा योगरता देवकी कामरूपिणी ।
कंसविद्राविणी दुर्गा कौमारी कौशिकी क्षमा ॥ ६३ ॥

कात्यायनी कालरात्रिर्निशितृप्ता सुदुर्जया ।
विरूपाक्षी विशालाक्षी भक्तानांपरिरक्षिणी ॥ ६४ ॥

बहुरूपा स्वरूपा च विरूपा रूपवर्जिता ।
घंटानिनादबहुला जीमूतध्वनिनिःस्वना ॥ ६५ ॥

महादेवेंद्रमथिनी भ्रुकुटीकुटिलानना ।
सत्योपयाचिता चैका कौबेरी ब्रह्मचारिणी ॥ ६६ ॥

आर्या यशोदा सुतदा धर्मकामार्थमोक्षदा ।
दारिद्यदुःखशमनी घोरदुर्गार्तिनाशिनी ॥ ६७ ॥

भक्तार्तिशमनी भव्या भवभर्गापहारिणी ।
क्षीराब्धितनया पद्मा कमला धरणीधरा ॥ ६८ ॥

रुक्मिणी रोहिणी सीता सत्यभामा यशस्विनी ।
प्रज्ञाधारामितप्रज्ञा वेदमाता यशोवती ॥ ६९ ॥

समाधिर्भावना मैत्री करुणा भक्तवत्सला ।
अंतर्वेदी दक्षिणा च ब्रह्मचर्यपरागतिः ॥ ७० ॥

दीक्षा वीक्षा परीक्षा च समीक्षा वीरवत्सला ।
अंबिका सुरभिः सिद्धा सिद्धविद्याधरार्चिता ॥ ७१ ॥

सुदीक्षा लेलिहाना च कराला विश्वपूरका ।
विश्वसंधारिणी दीप्तिस्तापनी तांडवप्रिया ॥ ७२ ॥

उद्भवा विरजा राज्ञी तापनी बिंदुमालिनी ।
क्षीरधारासुप्रभावा लोकमाता सुवर्चसा ॥ ७३ ॥

हव्यगर्भा चाज्यगर्भा जुह्वतोयज्ञसंभवा ।
आप्यायनी पावनी च दहनी दहनाश्रया ॥ ७४ ॥

मातृका माधवी मुख्या मोक्षलक्ष्मीर्महर्द्धिदा ।
सर्वकामप्रदा भद्रा सुभद्रा सर्वमंगला ॥ ७५ ॥

श्वेता सुशुक्लवसना शुक्लमाल्यानुलेपना ।
हंसा हीनकरी हंसी हृद्या हृत्कमलालया ॥ ७६ ॥

सितातपत्रा सुश्रोणी पद्मपत्रायतेक्षणा ।
सावित्री सत्यसंकल्पा कामदा कामकामिनी ॥ ७७ ॥

दर्शनीया दृशा दृश्या स्पृश्या सेव्या वरांगना ।
भोगप्रिया भोगवती भोगींद्रशयनासना ॥ ७८ ॥

आर्द्रा पुष्करिणी पुण्या पावनी पापसूदनी ।
श्रीमती च शुभाकारा परमैश्वर्यभूतिदा ॥ ७९ ॥

अचिंत्यानंतविभवा भवभावविभावनी ।
निश्रेणिः सर्वदेहस्था सर्वभूतनमस्कृता ॥ ८० ॥

बला बलाधिका देवी गौतमी गोकुलालया ।
तोषिणी पूर्णचंद्राभा एकानंदा शतानना ॥ ८१ ॥

उद्याननगरद्वारहर्म्योपवनवासिनी ।
कूष्मांडा दारुणा चंडा किराती नंदनालया ॥ ८२ ॥

कालायना कालगम्या भयदा भयनाशिनी ।
सौदामनी मेघरवा दैत्यदानवमर्दिनी ॥ ८३ ॥

जगन्माता भयकरी भूतधात्री सुदुर्लभा ।
काश्यपी शुभदाता च वनमाला शुभावरा ॥ ८४ ॥

धन्या धन्येश्वरी धन्या रत्नदा वसुवर्द्धिनी ।
गांधर्वी रेवती गंगा शकुनी विमलानना ॥ ८५ ॥

इडा शांतिकरी चैव तामसी कमलालया ।
आज्यपा वज्रकौमारी सोमपा कुसुमाश्रया ॥ ८६ ॥

जगत्प्रिया च सरथा दुर्जया खगवाहना ।
मनोभवा कामचारा सिद्धचारणसेविता ॥ ८७ ॥

व्योमलक्ष्मीर्महालक्ष्मीस्तेजोलक्ष्मीः सुजाज्वला ।
रसलक्ष्मीर्जगद्योनिर्गंधलक्ष्मीर्वनाश्रया ॥ ८८ ॥

श्रवणा श्रावणी नेत्री रसनाप्राणचारिणी ।
विरिंचिमाता विभवा वरवारिजवाहना ॥ ८९ ॥

वीर्या वीरेश्वरी वंद्या विशोका वसुवर्द्धिनी ।
अनाहता कुंडलिनी नलिनी वनवासिनी ॥ ९० ॥

गांधारिणींद्रनमिता सुरेंद्रनमिता सती ।
सर्वमंगल्यमांगल्या सर्वकामसमृद्धिदा ॥ ९१ ॥

सर्वानंदा महानंदा सत्कीर्तिः सिद्धसेविता ।
सिनीवाली कुहू राका अमा चानुमतिर्द्युतिः ॥ ९२ ॥

अरुंधती वसुमती भार्गवी वास्तुदेवता ।
मायूरी वज्रवेताली वज्रहस्ता वरानना ॥ ९३ ॥

अनघा धरणिर्धीरा धमनी मणिभूषणा ।
राजश्री रूपसहिता ब्रह्मश्रीर्ब्रह्मवंदिता ॥ ९४ ॥

जयश्रीर्जयदा ज्ञेया सर्गश्रीः स्वर्गतिः सताम् ।
सुपुष्पा पुष्पनिलया फलश्रीर्निष्कलप्रिया ॥ ९५ ॥

धनुर्लक्ष्मीस्त्वमिलिता परक्रोधनिवारिणी ।
कद्रूर्ध्दनायुः कपिला सुरसा सुरमोहिनी ॥ ९६ ॥

महाश्वेता महानीला महामूर्तिर्विषापहा ।
सुप्रभा ज्वालिनी दीप्तिस्तृप्तिर्व्याप्तिः प्रभाकरी ॥ ९७ ॥

तेजोवती पद्मबोधा मदलेखारुणावती ।
रत्ना रत्नावली भूता शतधामा शतापहा ॥ ९८ ॥

त्रिगुणा घोषिणी रक्ष्या नर्दिनी घोषवर्जिता ।
साध्या दितिर्दितिदेवी मृगवाहा मृगांकगा ॥ ९९ ॥

चित्रनीलोत्पलगता वृषरत्नकराश्रया ।
हिरण्यरजतद्वंद्वा शंखभद्रासनास्थिता ॥ १०० ॥

गोमूत्रगोमयक्षीरदधिसर्पिर्जलाश्रया ।
मरीचिश्चीरवसना पूर्णा चंद्रार्कविष्टरा ॥ १०१ ॥

सुसूक्ष्मा निर्वृतिः स्थूला निवृत्तारातिरेव च
मरीचिज्वालिनी धूम्रा हव्यवाहा हिरण्यदा ॥ १०२ ॥

दायिनी कालिनी सिद्धिः शोषिणी संप्रबोधिनी ।
भास्वरा संहतिस्तीक्ष्णा प्रचंडज्वलनोज्ज्वला ॥ १०३ ॥

सांगा प्रचंडा दीप्ता च वैद्युतिः सुमहाद्युतिः ।
कपिला नीलरक्ता च सुषुम्णा विस्फुलिंगिनी ॥ १०४ ॥

अर्चिष्मती रिपुहरा दीर्घा धूमावली जरा ।
सम्पूर्णमंडला पूषा स्रंसिनी सुमनोहरा ॥ १०५ ॥

जया पुष्टिकरीच्छाया मानसा हृदयोज्ज्वला ।
सुवर्णकरणी श्रेष्ठा मृतसंजीविनीरणे ॥ १०६ ॥

विशल्यकरणी शुभ्रा संधिनी परमौषधिः ।
ब्रह्मिष्ठा ब्रह्मसहिता ऐंदवी रत्नसंभवा ॥ १०७ ॥

विद्युत्प्रभा बिंदुमती त्रिस्वभावगुणांबिका ।
नित्योदिता नित्यहृष्टा नित्यकामकरीषिणी ॥ १०८ ॥

पद्मांका वज्रचिह्ना च वक्रदंडविभासिनी ।
विदेहपूजिता कन्या माया विजयवाहिनी ॥ १०९ ॥

मानिनी मंगला मान्या मालिनी मानदायिनी ।
विष्वेश्वरी गणवती मंडला मंडलेश्वरी ॥ ११० ॥

हरिप्रिया भौमसुता मनोज्ञा मतिदायिनी ।
प्रत्यंगिरा सोमगुप्ता मनोऽभिज्ञा वदन्मतिः ॥ १११ ॥

यशोधरा रत्नमाला कृष्णा त्रैलोक्यबंधनी ।
अमृता धारिणी हर्षा विनता वल्लकी शची ॥ ११२ ॥

संकल्पा भामिनी मिश्रा कादंबर्यमृतप्रभा ।
अगता निर्गता वज्रा सुहिता संहिताक्षता ॥ ११३ ॥

सर्वार्थसाधनकरी धातुर्धारणिकामला ।
करुणाधारसंभूता कमलाक्षी शशिप्रिया ॥ ११४ ॥

सौम्यरूपा महादीप्ता महाज्वाला विकाशिनी ।
माला कांचनमाला च सद्वज्रा कनकप्रभा ॥ ११५ ॥

प्रक्रिया परमा योक्री क्षोभिका च सुखोदया ।
विजुंभणा च वज्राख्या शृंखला कमलेक्षणा ॥ ११६ ॥

जयंकरी मधुमती हरिता शशिनी शिवा ।
मूलप्रकृतिरीशानी योगमाता मनोजवा ॥ ११७ ॥

धर्मोदया भानुमती सर्वाभासा सुखावहा ।
धुरंधरा च बाला च धर्मसेव्या तथागता ॥ ११८ ॥

सुकुमारा सौम्यमुखी सौम्यसंबोधनोत्तमा ।
सुमुखी सर्वतोभद्रा गुह्यशक्तिर्गुहालया ॥ ११९ ॥

हलायुधा चैकवीरा सर्वशस्त्रसुधारिणी ।
व्योमशक्तिर्महादेहा व्योमगा मधुमन्मयी ॥ १२० ॥

गंगा वितस्ता यमुना चंद्रभागा सरस्वती ।
तिलोत्तमोर्वशी रंभा स्वामिनी सुरसुंदरी ॥ १२१ ॥

बाणप्रहरणावाला बिंबोष्ठी चारुहासिनी ।
ककुद्मिनी चारुपृष्ठा दृष्टादृष्टफलप्रदा ॥ १२२ ॥

काम्याचरी च काम्या च कामाचारविहारिणी ।
हिमशैलेंद्रसकाशा गजेंद्रवरवाहना ॥ १२३ ॥

अशेषसुखसौभाग्यसंपदा योनिरुत्तमा ।
सर्वोत्कृष्टा सर्वमयी सर्वा सर्वेश्वरप्रिया ॥ १२४ ॥

सर्वांगयोनिः साव्यक्ता संप्रधानेश्वरेश्वरी ।
विष्णुवक्षःस्थलगता किमतः परमुच्यते ॥ १२५ ॥

परा निर्महिमा देवी हरिवक्षःस्थलाश्रया ।
सा देवी पापहंत्री च सान्निध्यं कुरुतान्मम ॥ १२६ ॥

इति नाम्नां सहस्रं तु लक्ष्म्याः प्रोक्तं शुभावहम् ।
परावरेण भेदेन मुख्यगौणेन भागतः ॥ १२७ ॥

यश्चैतत् कीर्तयेन्नित्यं शृणुयाद्वापि पद्मज ।
शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ॥ १२८ ॥

श्रीनिवासं समभ्यर्च्य पुष्पधूपानुलेपनैः ।
भोगैश्च मधुपकाद्यैर्यथाशक्ति जगद्गुरुम् ॥ १२९ ॥

तत्पार्श्वस्थां श्रियं देवीं संपूज्य श्रीधरप्रियाम्
ततो नामसहस्रोण तोषयेत् परमेश्वरीम् ॥ १३० ॥

नामरत्नावलीस्तोत्रमिदं यः सततं पठेत् ।
प्रसादाभिमुखीलक्ष्मीः सर्वं तस्मै प्रयच्छति ॥ १३१ ॥

यस्या लक्ष्म्याश्च संभूताः शक्तयो विश्वगाः सदा ।
कारणत्वे न तिष्ठंति जगत्यस्मिंश्चराचरे ॥ १३२ ॥

तस्मात्प्रीता जगन्माता श्रीर्यस्याच्युतवल्लभा ।
सुप्रीताः शक्तयस्तस्य सिद्धिमिष्टां दिशंति हि ॥ १३३ ॥

एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः ।
तदशशक्तिमंतोऽन्ये ब्रह्मेशानादयो यथा ॥ १३४ ॥

तथैवैका परा शक्तिः श्रीस्तस्य करुणाश्रया ।
ज्ञानादिषांगुण्यमयी या प्रोक्ता प्रकृतिः परा ॥ १३५ ॥

एकैव शक्तिः श्रीस्तस्या द्वितीयात्मनि वर्तते ।
परा परेशी सर्वेशी सर्वाकारा सनातनी ॥ १३६ ॥

अनंतनामधेया च शक्तिचक्रस्य नायिका ।
जगच्चराचरमिदं सर्वं व्याप्य व्यवस्थिता ॥ १३७ ॥

तस्मादेकैव परमा श्रीर्ज्ञेया विश्वरूपिणी ।
सौम्या सौम्येन रूपेण संस्थिता नटजीववत् ॥ १३८ ॥

यो यो जगति पुंभावः स विष्णुरिति निश्चयः ।
या या तु नारीभावस्था तत्र लक्ष्मीर्व्यवस्थिता ॥ १३९ ॥

प्रकृतेः पुरुषाच्चान्यस्तृतीयो नैव विद्यते ।
अथ किं बहुनोक्तेन नरनारीमयो हरिः ॥ १४० ॥

अनेकभेदभिन्नस्तु क्रियते परमेश्वरः ।
महाविभूतिं दयितां ये स्तुवंत्यच्युतप्रियाम् ॥ १४१ ॥

ते प्राप्तवंति परमां लक्ष्मीं संशुद्धचेतसः ।
पद्मयोनिरिदं प्राप्य पठन् स्तोत्रमिदं क्रमात् ॥ १४२ ॥

दिव्यमष्टगुणैश्वर्यं तत्प्रसादाच्च लब्धवान् ।
सकामानां च फलदामकामानां च मोक्षदाम् ॥ १४३ ॥

पुस्तकाख्यां भयत्रात्रीं सितवस्त्रां त्रिलोचनाम् ।
महापद्मनिषण्णां तां लक्ष्मीमजरतां नमः ॥ १४४ ॥

करयुगलगृहीतं पूर्णकुंभं दधाना
क्वचिदमलगतस्था शंखपद्माक्षपाणिः ।
क्वचिदपि दयितांगे चामरव्यग्रहस्ता
क्वचिदपि सृणिपाशं बिभ्रती हेमकांतिः ॥ १४५ ॥

॥ इत्यादिब्रह्मपुराणे काश्मीरवर्णने हिरण्यगर्भहृदये सर्वकामप्रदायकं पुरुषोत्तमप्रोक्तं श्रीलक्ष्मीसहस्रनामस्तोत्रं समाप्तम् ॥